त्र्युग्मप्रमाणास्ता रुद्रहोमार्चनेष्वन्यत्रापि चैतन्यंशांभवं व्रतमेतत्सर्वेषु वेदेषु वेदवादिभिरुक्तं तत्समाचरेन्मुमुक्षुरपुनर्भवाय ॥ १ ॥ अथातो रुद्राक्षधारणविधिं व्याख्यास्यामो महाव्रतं सर्वपापघ्नमिदमिति ब्रह्मवादिनो वदंति रुद्रजपहोमार्चनेष्वन्यत्रापि चैतन्नित्यमानर्दैक्यस्मरणाद्विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः सर्वेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य हृत्पुंडरीकं विरजं विशुद्धं मध्ये विशदं विशोकं विचिन्त्य तस्मिन्नादिमध्यांतवीहीनमेकं विभुं चिदानंदमरूपमद्भुतं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशांतमुमासहायं चिंतयन् त्र्यंबकं यजामह इत्योंनमः शिवायेति वा प्रतिष्ठितरुद्राक्षाणां सहस्रं प्रतिष्ठामंत्रयोरन्यतरेण धारयेदेवं यो धारयेत्स रुद्रवद्भवेदभावे सहस्रस्यैकं शिखायां शिरसि चत्वारिंशदेकं नयनयोर्मध्ये कर्णयोः पट् पट् कंठे द्वात्रिंशद्बाह्वोः षोडश षोडश करयोर्द्वादश द्वादश वक्षस्यष्टोत्तरं शतं यो धारयेत्स रुद्रवत्पूज्यो भवेन्मुक्ताप्रवालस्फटिकरौप्यवैडूर्यकांचनैः समेतत्तान्यो धारयेत्सशिवो भवेत् ॥ २ ॥ अथातो रुद्रविनियुक्तानां मंत्राणामृषिदैवतछंदांस्यनुक्रमिष्यामो मनोजूतिर्बृहस्पतिरांगिरसो यजुर्विश्वेदेवा अबोध्यग्निर्बुधगविष्ठिरौ त्रिष्टुबग्निर्मूर्धानं भरद्वाजस्त्रिष्टुबग्निर्वैश्वानरो मर्माणि विवस्वाँस्त्रिष्टुप् लिंगोक्ता याते रुद्रेत्यादीनां रौद्राध्यायेदिनोपरिष्टाद्रुद्रस्यापो दशार्णस्य प्रजापतिर्विराड्रुद्रस्त्रातारं गर्गस्त्रिष्टुबिंद्रस्त्वन्नो अग्न आंगिरसा हिरण्यस्तूप आग्नेयी जगती सुगन्नुपथां प्रजापतिस्त्रिष्टुबैवस्वतोऽमृन्वंतं प्रजापतिस्त्रिष्टुप्निर्ऋतिस्तत्त्वायामि शुनः शेपस्त्रिष्टुब्वरुण आनोनियुद्भिर्वसिष्ठस्त्रिष्टुग्वायुस्तमीशानं गोतमजगतीमीशानोऽस्मेरुद्राः प्रयायास्त्रिष्टुप्ब्रह्मा स्योना मेधातिथिर्गायत्रयनंतो यज्जाग्रतः षण्णां शिवसंकल्पस्त्रिष्टुप्मनः सहस्रशीर्षा षोडशर्चा नारायणः पुरुषः पंचदशानुष्टुप् षोडशी त्रिष्टुप् जगद्बीजं पुरुषं ऽद्भ्यः षण्णां पूर्वानुराधस्यार्षमाद्यास्तिस्त्रस्त्रिष्टुभो द्वे अनुष्टुभावंत्यस्त्रिष्टुबादित्य आशुर्द्वाःशानामप्र प्रतिरथस्त्रिष्टुबिंद्रो विभ्राड्बृहद् विभ्राट्सौर्य उदुत्यंतिस्त्रः प्रस्कण्वः प्रतीकनोदितानां ब्रह्मस्वयंभ्वानोगुम्स्योयदद्यशुनकसमुनकसो तरणिः प्रस्कण्वस्तत्सूर्यस्य वयो कुत्सो वरुणहान द्योजपदग्निः श्रायंत इव नृमेधोऽयादेवाः कुत्स आकृष्णेन हिरण्यस्तूप आंगिरसो विभ्राड् जगती उदुत्यं तिस्रो० गायत्र्यस्तंप्रत्नथा जगतीमयं वेनस्त्रिष्टुभो यदद्य गायत्र्यौ तत्सूर्यस्य त्रिष्टुभौ वण्महान्नद्र बृहती सतो बृहत्यौ श्रायंत इव बृहती मयादेवा द्वे त्रिष्टुभौ सर्वाः सौर्यः ॥३॥ प्रणवस्य ब्रह्मा दैवी गायत्री परमात्माग्निमीहाव्याहृतीनां प्रजापतिर्देवावाग्निर्वा गंधर्वा वा श्रीर्जि दजूंष्णिवायुसूर्यदेवस्त्वामिशतरुद्रियं परमेष्टिन आर्षं देवानां वा

प्रजापतेर्वा प्रथमागायत्री तिस्रोऽनुष्टुभास्तिस्रः पंक्तयः सप्तानुष्टुभो द्वे जगत्यौ मानो द्वे कुत्सस्यैकरुद्रः सर्वासां हिरण्य बाहव इत्यादीनि यजूंषि प्रागंतरानुवाका द्धद्रुद्रदैवत्यानि तेषामुभयतो नमस्कारा अन्येऽन्यतरतो नमस्कारा अपरे हिरण्य बाहव इत्यादयो द्वंद्विनो रुद्राः सभाभ्यः इत्यादयो जाताख्या अन्यानुवाकस्य प्रथमोपरिष्टा बृहती द्वितीया जगती कुत्सस्य तृतीयानुष्टुप् द्वे त्रिष्टुभो द्वे अनुष्टुभावेकरुद्रः सप्तानामसंख्यातादशानुष्टुभां मत्यवरोहपञ्जुषां च बहवो रुद्राश्चमकानुवाका अष्टौ देवामार्षं सर्वाणि यजूंष्यग्निदैवत्यानि शिरसः प्रजापतिरनुक्तानां वय सोम बंधुस्त्रयायुषं नारायणो वयं सोम गायत्री सोम एषने द्वे यजुषी रौद्रे अवरुद्र पंक्तिर्भेषजं ककुप् त्र्यंबकं द्वे अनुष्टुभावेतत्ते आस्तारपंक्तिः पंचरौद्रयास्त्रयायुषमुष्णिह यजमानाशिषंशिवो नामयजुःक्षुरं निवर्तयामि यजुर्लिंगोक्तं दैवतम् ॥ ४ ॥ ऋचं वाचमध्यायो वैश्वदेवो दध्यङ्ङाथर्वणदृष्टऋचं वाचं पंच यजूंषि लिंगोक्तदैवतानि यन्मे पंक्ति बृहस्पतिर्महाव्याहृतीनां सावित्र्याश्चदध्यङ्ङाथर्वणो दैवतमुक्तं सावित्र्या गायत्री कयानस्तिस्रोदध्यङ्ङाथर्वणेन दृष्टा गायत्र्य ऐंद्र्यः कयात्वमैंद्र्यनिरुक्ता गायत्रीं द्वे विश्वस्य द्विपदा विराडिंद्रः शन्नो द्वे अनुष्टुभौ लिंगोक्तामित्रादयोऽहानि शं द्विपदा गायत्री लिंगोक्ता मित्रादयोऽहानि शं द्विपदा गायत्री लिंगोक्ता अहानि रात्रयः शन्न इंद्राग्नि त्रिष्टुबिंद्राग्न्यादयो लिंगोक्ता शन्नो देवी गायत्र्यापः स्योना दध्यङ्ङाथर्वणश्छंद उक्तं पृथिव्यापोहिष्ठास्तिस्रो दध्यङ्ङाथर्वणदृष्टा गायत्र्य अब्देवत्या द्यौः शांतिर्द्वादश यजूंषि लिंगोक्ता दैवतानि दृतेदृंहेत्यादीनां यजुषां लिंगोक्ता अंतरीक्षादयो नमस्ते द्दरसे दध्यङ्ङाथर्वणो बृहतीयग्निर्नमस्ते अस्तु द्वे अनुष्टुभौ विद्युदादयः सुमित्रिया दध्यङ्ङाथर्वणो यजूंषी आपस्तचक्षुः पुर उष्णिक् सौरी सद्योजातमित्यादीनां पंचानां सद्योजात वामदेवाघोरतत्पुरुषेशानात्रिष्टुप् जगत्यनुष्टुप् गायत्र्यनुष्टुभो रुद्रोऽग्निरिति भस्मेत्यादीनां पिप्पलादो गायत्री कालाग्निरुद्र आपो ज्योतिः प्रजापतिर्यजुर्ब्रह्माग्निवायुसूर्या आपोहिष्ठा तिसृणां सिंधुद्वीपश्छंदो दैवतमुक्तमक्षीभ्यां षण्णां विरुड्ढानुष्टुप् यक्ष्मघ्ना ॐ नमो रुद्रायोंन्नमो रुद्राय ॥ ५ ॥ इतिरुद्रसूत्रे तृतीयोऽध्यायः ॥

श्रीमदानंतदेवेन श्रीमद्रुद्रवसूनुना । त्रैविद्यमोदसंज्ञेन काशीपुरनिवासिना ॥ १ ॥
मया विरचितं चैतच्छ्रुतिस्मृतिपुराणतः । स्वकल्पितत्वशंकात्र न कार्या विबुधैरतः
परोपकृतये कृत्वा रुद्रसूत्रं समर्पितम् ॥ मदीयनाथयोर्विष्णुवंशयोः शिवपादयोः ॥
न मदीया कृतिर्यस्मात्कृतिरेषा शिवस्य च ॥ यथा प्रेरितवान् रुद्रस्तथा लेखितवानहम्

अध्येतव्यमिदं सूत्रं विप्रैर्वाजसनेयिभि । रुद्रस्य त्रिविधस्याशु तत्त्वज्ञानाभिलाषिभिः मुहुर्मुहुः पार्थयेह सज्जनान शुद्धमानमान्॥ मयोक्तमिह संशोध्यं विचार्य सदसच्चयत् ज्ञात्वानुच्छिष्टमर्थं यः करोति ग्रथगोपनम्॥ तस्य श्रेयोऽधिनस्तन्न भूयाच्चोरो यतो हि सः यश्च श्रमः समुत्पन्नो ग्रंथस्यास्य विलेखने॥ सर्वात्मा तेन विश्वेश प्रीयतां परमः शिवः

## ॥ अथ ग्रंथकर्तृप्रार्थना ॥

मया सद्वासद्वा यदिह गदितं मंदमतिना ।
किमेतच्छक्यं वाऽध्यवसितुमपि स्वल्पमतिना ॥
तदेवं यत्किंचित्सततमिह विख्यातमहिमा ।
प्रतापोऽयं सर्वो विकसति हि विश्वेश्वरणयोः ॥ १ ॥

जगति सकलविद्यासिंधुमुष्टिप्रयाना ।
परभणिति परिक्षा युज्यते सज्जनानाम् ॥
तदिह मम विमृश्यं भूषणं दूषणं वा ॥
यदि भवति विदग्धैस्तद्ध्रुवं पुस्तकेषु ॥ २ ॥

अनेन प्रीयतां देवौ पार्वतीपरमेश्वरौ ॥
महारुद्रादिकर्तृभ्यो मुक्तिं भुक्तिं च यच्छतु ॥ ३ ॥

रुद्रकल्पद्रुमस्येयं प्रथमासत्कृतिरित्वयम् ॥
पूर्णाभूदीशकृपयानयेशः शं विधास्यतु ॥ ४ ॥

इति श्रीसूर्यपुरवास्तव्यखेडावालविप्रज्ञातीयेन द्विवेदुप-
नामकेन श्रीपरशुरामात्मजेन " जगन्नाथशर्मणा "
संशोधितः श्रीरुद्रसूत्रसमन्वितः श्रीरुद्रकल्पद्रुमः



## पांचसो वर्षनो जुनो मंत्रशास्त्रनो भंडार

# "श्रीमंत्रसारसमुच्चयः" (पूजाविधिसहितः)

जेमां यथाविधि मुद्राप्रकार यंत्रलक्षण दीक्षाविधि नक्षत्रचक्र अकथह-चक्र दुष्टमंत्रशोधनप्रकार अकडमचक्र पद्मपत्रचक्र ऋणधनशोधन मंत्रदश-संस्कार गुरुशिष्यलक्षणो दीक्षासमय क्रियावतीदीक्षाप्रयोग रामपुरश्चर्या मंत्रस्नान संध्याविधि भूशुद्धयादिन्यास कलाकेशवश्रीकंठादिमातृकान्यास तत्त्वन्यास पात्रासादन रामयंत्र ९ समुच्चय रामनवमीव्रतविधि हनुमत्पुरश्चर्या हनुमन्मालामंत्र हनुमद्दीपदान दमनमहोत्सव विष्णुशयनमहोत्सव पवित्रा-रोपणोत्सव विजयोत्सव विष्णुप्रबोधोत्सव रथमहोत्सव त्रैपुरोत्सव होलिको-त्सव नृसिंहपुरश्चर्या नृसिंहसामराजविधि पुरुषसूक्तन्यास वेदोक्तनृसिंहपूजा सहस्राक्षरादिमालामंत्रो कार्त्तवीर्यार्जुनपुरश्चर्या कार्त्तवीर्यमालामंत्रो कार्त्तवीर्य-दीपदान विष्णुपुरश्चर्या वराहयंत्रोद्धार गणपतिपुरश्चर्या लक्ष्मीहरिद्रा गणेश-मालामंत्रो सूर्यादिनवग्रहमालामंत्रो त्रिकालसंध्याप्रयोग गायत्रीपुरश्चर्या सर-स्वतीपुरश्चर्या भूतलीपीयंत्र चतुःषष्ठीमातृकापूजा भूतयंत्रो तारापुरश्चर्या चतुःषष्ठीशक्तिपूजा कमलात्मिकापुरश्चर्या लक्ष्मीमालामंत्रो षोडशीश्रीविद्या-पुरश्चर्या त्रिपुरसुंदरीपूजा बालात्रिपुरामंत्र भुवनेश्वरीपुरश्चर्या श्रीकालीपुर-श्चर्या भद्रकालीश्मशानकालीसुमुखीमंत्रो छिन्नमस्तापुरश्चर्या रेणुकास्वयंव-रामधुमतीप्रमदाचंडीकालरात्रीमंत्रो वशीकरणस्तंभनमोहनआकर्षणउच्चाटन-विद्वेषणमारणमंत्रप्रयोग शतचंडीविधान दुर्गाप्रयोग धूमावतीपुरश्चर्या त्रिपुर-भैरवीपुरश्चर्या मातंगीपुरश्चर्या चतुःषष्ठीयोगिनीपूजा कर्णपिशाचीनीप्रयोग शीतलामंत्र बगलामुखीपुरश्चर्या श्रीपार्थिवपूजा शिवमंत्रप्रयोग दक्षिणामूर्त्ति-प्रयोग अघोरास्त्र पाशुपतास्त्रमंत्रो क्षेत्रपालप्रयोगः बटुकभैरवदीपदान सर्व-देवपूजामंत्रो प्रणवस्वरूपनिरूपण विगेरे वसो विषयो शुद्धसंस्कृत भाषामां वर्णवेलां छे, पुस्तकपृष्ठ पांचसो, किंमत दोढ रूपीयो, फक्त बसो नकल बाकीछे, माटे आजेज मंगावो, पुस्तको थई रहेथी जरूर पस्तासो ॥ इति शिवम् ॥

संवत् १९८३ वर्षारंभः | शास्त्री. जगन्नाथ परशुराम द्विवेदी. ठे. वाडीफळीया मु. सुरत

घणांज सुधारा वधारा साथे आवृति बीजी

# श्रीश्राद्धकौमुदी ( सूतकनिर्णयसहिता )

जेमां यथाविधि पर्वपिंडविधि पुत्तलविधान नित्यश्राद्ध प्रयोग व्यहश्राद्ध पंचकविधान सूर्यसूक्त इंद्रसूक्त रुद्रसूक्त सूतिकाविधान रामरक्षास्तोत्र दशाहश्राद्ध एकादशाहश्राद्धप्रयोग हेमाद्रिप्रयोग पंचसूक्तो वृषोत्सर्ग द्वादशाहश्राद्धप्रयोग त्रयोदशाहश्राद्ध श्रवणीश्राद्ध शय्यादानविधि नारायणबलीश्राद्धप्रयोग तीर्थश्राद्ध अभिषेकमंत्रो ( ३० ) प्रेतबलीप्रयोग सर्पबली भूतबलि काकबलि नीलोद्वाहप्रयोग मातृकास्थापन नांदीश्राद्ध ग्रहस्थापन लक्ष्मीसूक्त मधुपर्क विवाहविधि तर्पणविधिमंत्रो ( ६४ ) पिंडदानमंत्रो ( २४ ) त्रिपिंडश्राद्ध मासिकमहालयश्राद्ध सूतकनिर्णय विगेरे पोणोसो विषयो गुजरातीमां टीपणी साथे संस्कृत भाषामां वर्णवेलां छे, पुस्तक पृष्ठ त्रणसो, स्वर्गवासी डे. ए. इ. तापीशंकर प्राणशंकर स्मारक मदद मळवाथी किंमत फक्त चार आना, वि. पि. थी मंगावनार पासे एक रूपीयो, सामटी पांच नकलना घेरबेठा चार रूपीया.

शाके. १८४८ वर्षारंभः } शास्त्री. जगन्नाथ परशुराम द्विवेदी.

ठे. वाडीफळीया मु. सुरत.

घणांज सुधारा वधारा साथे आवृत्ति त्रीजी.

# "श्रीविवाहचंद्रिका" (षोडशसंस्कारसहिता)

जेमां यथाविधि गणेश (कुरवडी) स्थापन मंडपमुहूर्त ग्रहयज्ञ गणपतीपूजा मातृकापूजा नांदीश्राद्ध अर्घवंदन ब्राह्मणप्रार्थना पुण्याहवाचन अभिषेक कुशकंडिका ग्रहस्थापन नवग्रहहोम उत्तरपूजन बलिदान पूर्णाहुतिमंत्रो श्रेयोदान दानविधि आशीर्वाद गर्भाधानप्रयोग पुंसवन सीमन्तोन्नयन जातकर्म बालरक्षाविधि षष्ठीपूजा नामकरण आंदोलाशयन भूम्युपवेशन अन्नप्राशन अन्तरितप्रायश्चित्तप्रयोग चूडाकरण कर्णवेध जन्मदिनपूजा उपनयन ब्रात्यप्रायश्चित्त वेदारंभ केशान्त समावर्त्तन वाग्दान हस्तमेलापकश्लोक (३०) मधुपर्क कन्यादानसंकल्प विवाहहोम सप्तपदी चतुर्थीकर्म कुंभविवाह अर्कविवाह तुलसीविवाह आवसथ्याधान औपासनहोम पक्षादिकर्मविधि श्रौताधानप्रयोग विगेरे पोणोसो विषयो गुजराती-भाषामां टीपणी साथे शुद्ध संस्कृत भाषामां वर्णवेलां छे, पुस्तक पृष्ठ अढीसो, किंमत बार आना वि. पि. थी मंगावनार पासे एक रुपियो ॥

संवत् १९८३ } शास्त्री जगन्नाथ परशुराम द्विवेदी.

वर्षारंभः } ठे. वाडीफळीया मु–सुरत.

देवीना भक्तो जाग्रत थाओ अने आजेज मंगावो ?

# " श्रीदुर्गाकल्पद्रुमः " (सप्तशतीपाठसमेतः)

जेमां यथाविधि साहित्यनी यादी एक पंच नवकुंड करणाकरणविचार, शतचंडीमुहूर्त, मंत्रमहोदध्युक्तशतचंडीमहात्म्य, शास्त्रार्थपरिच्छेद श्लोक घणो, सोदाहरणमष्टांगसिद्धिपंचांग, कमलाकरभट्टप्रोक्तसहस्रचंडीप्रयोग होमपरिच्छेदसाथे, मंत्रकौमुदीप्रोक्तराशिबलिदान, जगन्नाथोक्तशत चंडीप्रयोग जेमां गणपत्यथर्वशीर्ष, मातृकास्थापन, नांदीश्राद्ध, पुण्याहवाचन, जळयात्रा, शास्त्रोक्तमंडपपूजा, वास्तुस्थापन, भद्रमंडलदेवता प्रधानदेवतास्थापन, शिवाग्निप्रयोग ग्रहस्थापन, चतुःषष्टियोगिनीभैरवस्थापन, भूशुद्ध्यादि एकादशमहान्यास, पात्रासादन, राजोपचारपूजामंत्रो (३७) देवीमहिम्नःस्तोत्र. लक्ष्मीसहस्रनामावली, पूजांगहोमबलिदान, देवीनी नव आरतीओ देव्यथर्वशीर्ष, स्तुतिपाठनां पांच स्तोत्रो, कुमारिकापूजा नवग्रहादिहोम, कूष्मांडबलिदान, पूर्णाहुतिमंत्रो (६४) श्रेयोदान, अभिषेक, आशीर्वाद नवचंडीप्रयोग, नवरात्रकलशस्थापनपूजनप्रयोग, दीपोत्सवी लक्ष्मीशारदापूजा, सप्तशतीपाठमंत्रो ( ७०० ) सप्तशतीमंत्रविभागकारिका, गोविंदभट्टसरलीकृतशतचंडीपद्धति संपूर्ण बे खंड साथे ग्रंथकर्तृप्रार्थना, विगेरे सवासो विषयो गुजरातीमां ,टीपणी साथे शुद्ध संस्कृत भाषामां वर्णवेलां छे. पुस्तक पृष्ठ पांचसो, किंमत फक्त दोढ रूपीयो इति शिवम् ॥

संवत् १९८३ वर्षारंभः

शास्त्री जगन्नाथ परशुराम द्विवेदी.

ठे. वाडीफळीया मु. सुरत.

ATIYA VID